रं हरान् पारिजातं तरुश्चायं तथैवोच्चैःश्रवा हयः ८७ किंमा
नेहंससंयुक्तमेतन्निष्पनितेंगणे रत्नभूतमिहानीतं पद्म
सोद्धधशोऽङ्गुतं ८८ निधिरेष महापद्मः समानीतो धने
श्वरात् किंजल्किनीं ददौ चाब्धिर्मालामम्लानपंकजां ८९
छत्रं ते वारुणं गेहे कांचनस्रावि तिष्ठति तथायं स्यंदनवरो
यः पुरासीत्प्रजापतेः ९० मृत्यो रत्क्रांतिदा नाम शक्तिरी
शालयाहृता पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे ९१

दुर्गा निशुंभस्याब्धिजाताश्चसमस्तारत्नजातयः वन्हिरपिददौतु २
भ्यमग्निशौचेचवाससी १०२ एवंदैत्येंद्ररत्नानिसमस्तान्या
३८ हृतानितेस्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते १०३
ऋषिरुवाच ॥१०४॥ निशम्येतिवचःशुंभःसतदाचंडमुंडयोः प्रे
षयामासुग्रीवंदूतंदेव्यामहासुरं १०५ इतिचेतिचवक्तव्यासा
गत्वावचनान्मम यथाचाभ्येतिसंप्रीत्यास्तथाकार्यंत्वयाल शिव
घु १०६ सतत्रगत्वायत्रास्तेशैलोद्देशेतिशोभने सादेवीतांस्त ३८

तः प्राहश्लक्ष्णं मधुरयागिरा ॥ १०७ ॥ दूत उवाच ॥ १०८ ॥ देवि दैत्येश्व
रः शुंभस्त्रैलोक्ये परमेश्वरः दूतोहं प्रेषितस्तेन त्वत्सकाश
मिहागतः १०९ अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु
निर्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ११० मम त्रैलो
क्यमखिलं मम देवा वशानुगाः यज्ञभागानहं सर्वानुपाश्ना
मि पृथक् पृथक् १११ त्रैलोक्ये वररत्नानि मम वश्यान्यशे
षतः तथैव गजरत्नं च हृत्वा देवेंद्रवाहनम् ११२ क्षीरोदमथ

दुर्गा तोद्भुतमश्वरत्नममामरैः उच्चैःश्रवससंज्ञंतंप्रणिपत्यस रम
मर्पितम् ११३ यानिचान्यानिदेवेषुगंधर्वेषूरगेषुच रत्न
३५ भूतानिभूतानितानिमय्येवशोभने ११४ स्त्रीरत्नभूतांत्वांदे
विलोकेमन्यामहेवयम् सात्वमस्मानुपागच्छयतोरत्नभु
जोवयम् ११५ मांवाममानुजंवापिनिशुंभमुरुविक्रमं भजत्वं
चंचलापांगिरत्नभूतानिवैयतः ११६ परमैश्वर्यमतुलं
प्राप्स्यसेमत्परिग्रहात् एतद्बुद्ध्यासमालोच्यमत्परिग्रहतां ३५

त्रुज ॥११७॥ ऋषिरुवाच ११८ इत्युक्त्वा सा तदा देवी गंभीरांतः

स्मिता जगौ दुर्गा भगवती भद्रा ययेदं धार्यते जगत् ११९ ।

दूत उवाच ॥१२०॥ सत्यमुक्तं त्वया नात्र मिथ्या किंचित्त्वयोदित

म् त्रैलोक्याधिपतिः शुंभो निशुंभश्चापि तादृशः १२१ किं

त्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथम् श्रूयतामल्पबु

द्धित्वात्प्रतिज्ञा या कृता पुरा १२२ यो मां जयति संग्रामे यो

मे दर्पं व्यपोहति यो मे प्रतिबलो लोके स मे भर्त्ता भविष्यति

दुर्गा १२३ तदा गच्छंतु शुंभोत्र निशुंभो वा महासुरः मां जित्वा किंचि एम
रेणात्र पाणिं गृह्णातु मे लघु १२४ ॥ दूत उवाच ॥ १२५ अव
३६ लिप्तासि मैव त्वं देवि ब्रूहि ममाग्रतः त्रैलोक्ये कः पुमांस्ति
ष्ठेदग्रे शुंभनिशुंभयोः १२६ अन्येषामपि दैत्यानां सर्वे
देवा न वै युधि तिष्ठंति संमुखे देवि किं पुनः स्त्री त्वमेकिका
१२७ इंद्राद्याः सकला देवास्तस्थुर्येषां न संयुगे शुंभादी
नां कथं तेषां स्त्री प्रयास्यसि संमुखम् १२८ सा त्वं गच्छ म ३६

ये वोक्ता पार्श्वं शुंभनिशुंभयोः केशाकर्षणनिर्धूतगौ
रवा मा गमिष्यसि १२९ ॥ देव्युवाच ॥१३०॥ एवमेतद्बली शुं
भो निशुंभश्चातिवीर्यवान् किं करोमि प्रतिज्ञा मे यदना
लोचिता पुरा १३१ सा त्वं गच्छ मयैवोक्तं यदेतत्सर्वमा
दृतः तदाचक्ष्वासुरेंद्राय स च युक्तं करोतु यत् १३२ ॥ इति
मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये दूत
संवादः ॥५॥ ऋषिरुवाच ॥१॥ इत्याकर्ण्य वचो देव्याः स

दुर्गा दूतोमर्षपूरितः समाचष्टेसमागम्य दैत्यराजाय विस्त एम
रात् २ तस्य दूतस्य तद्वाक्यमाकर्ण्यासुरराट्ततः स
३७ क्रोधः प्राह दैत्यानामधिपं धूम्रलोचनम् ३ हे धूम्रलोच
नाशु त्वं स्वसैन्यपरिवारितः तामानय बलाद्दुष्टां केशा
कर्षणविह्वलाम् ४ तत्परित्राणदः कश्चिद्यदि वोत्ति
ष्ठतेपरः स हंतव्यो मरो वापि यक्षो गंधर्व एव वा ५ ॥
ऋषिरुवाच ॥ ६ ॥ तेनाज्ञप्तस्ततः शीघ्रं स दैत्यो धूम्रलो ३७

चनः वृतः षष्ट्यासहस्राणामसुराणांद्रुतंययौ ७ सद
ष्ट्वातांततोदेवींतुहिनाचलसंस्थितां जगादोच्चैः प्रयाही
तिमूलंशुंभनिशुंभयोः ८ नचेत्प्रीत्याद्यभवतीमद्भर्तार
मुपैष्यति ततोबलान्नयाम्येषाकेशाकर्षणविह्वलां
९॥देव्युवाच॥१० दैत्येश्वरेणप्रहितोबलवान्बलसंवृ
तः बलान्नयसिमामेवंततःकिंतेकरोम्यहं ११॥ऋषिरु
वाच॥१२॥इत्युक्तः सोभ्यधावत्तामसुरोधूम्रलोचनः ।

दुर्गा हुंकारेणैव तं भस्म साच कारांबिका ततः ५३ अथ क्रुद्धं राम
महासैन्यमसुराणां तथांबिका ववर्ष शायकैस्तीक्ष्णैः
२८ स्तथा शक्तिपरश्वधैः ५४ ततो धुतसटः कोपात्कृत्वा नादं सु
भैरवम् पपातासुरसेनायां सिंहो देव्याः स्ववाहनः ५५ कां
श्चित्करप्रहारेण दैत्यानास्येन चापरान् आक्रांत्या चा
धरेणान्यान्स जघान महासुरान् ५६ केषांचित्पाटयामा
स नखैः कोष्ठानि केसरी तथा तलप्रहारेण शिरांसि कृतवान्पृथक् २८
५७

विच्छिन्नबाहुशिरसः कृतास्तेन तथापरे पपौच रुधिरं
कोष्टादन्येषांधुतकेशरः १८ क्षणेनतद्बलंसर्वंक्षयंनी
तंमहात्मना तेनकेशरिणादेव्यावाहनेनातिकोपिना १९
श्रुत्वातमसुरंदेव्यानिहतंधूम्रलोचनम् बलंचक्षयि
तंकृत्स्नंदेवीकेशरिणाततः २० चुकोपदैत्याधिपतिः
शुंभःप्रस्फुरिताधरः आज्ञापयामासचतौचंडमुंडौ
महासुरौ २१ हेचंडहेमुंडबलैर्बहुलैःपरिवारितौ तत्रग

दुर्गा च्छतगत्वाचसासमानीयतांलघु २२ केशेष्वाकृष्यवध्वा राम
वायदिवःसंशयोयुधि तदाशेषायुधैःसर्वैरसुरैर्विनिह
३९ न्यताम् २३ तस्यांहतायांदुष्टायांसिंहेचविनिपातितेशी
घ्रमागम्यतांवध्वागृहीत्वातामथांबिकां २४॥इतिमार्कं
डेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येधूम्रलोचन
वधः॥६॥ऋषिरुवाच॥१॥ आज्ञप्तास्तेततोदैत्याश्चंड
मुंडपुरोगमाः चतुरंगवलोपेताययुरभ्युद्यतायुधाः १ ३९

ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थितां सिंहस्योपरि शै
लेंद्रशृंगे महति कांचने ३ ते दृष्ट्वा तां समादातुमुद्यमं चक्रु
रुद्यताः आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ४
ततः कोपं चकारोच्चैरंबिका तानरीन्प्रति कोपेन चास्या वद
नं मषीवर्णमभूत्तदा ५ भ्रूकुटीकुटिलात्तस्या ललाटफ
लकाद्द्रुतं कालीकरालवदना वि निष्क्रांतासिपाशिनी ६
विचित्रखट्वांगधरा नरमालाविभूषणा द्वीपिचर्मपरीधा
ना

दुर्गा नाशुष्कमांसातिभैरवा ७ अतिविस्तारवदनाजिह्वाललन एम
भीषणा निमग्नारक्तनयनानादापूरितदिङ्मुखा ८
४० सावेगेनाभिपतिताघातयंतीमहासुरान् सैन्येतत्रसुरा
रीणामभक्षयततद्बलम् ९ पार्ष्णिग्राहांकुशग्राहियो
धघंटासमन्वितान् समादायैकहस्तेनमुखेचिक्षेपवार
णान् १० तथैवयोधंतुरगैरथंसारथिनासह निक्षि
प्यवक्त्रेदशनैश्चर्वयंत्यतिभैरवम् ११ एकंजग्राहकेशेषुग्री ४०

वायामथचापरम् पादेनाक्रम्य चैवान्यमुरसान्यमपोथ
यत् १२ तैर्मुक्तानि चशस्त्राणि महास्त्राणि तथासुरैः मु
खेन जग्राह रुषा दशनैर्मथितान्यपि १३ बलिनां तद्बलं
सर्वमसुराणां दुरात्मनां ममर्द्दाभक्षयच्चान्यानन्यांश्चा
ताडयत्तथा १४ असिना निहताः केचित्केचित्खट्वाङ्ग
ताडिताः जग्मुर्विनाशमसुरा दन्ताग्राभिहतास्तथा १५
क्षणेन तद्बलं सर्वमसुराणां निपातितम् दृष्ट्वा चंडोऽभि

दुर्गा दुद्रावतांकालीमतिभीषणाम् १६ शरवर्षैर्महाभीमैर्भी रम
माक्षींतांमहासुरः छादयामासचक्रैश्चमुण्डः क्षिप्तैः सह
४१ स्रशः १७ तानिचक्राण्यनेकानिविशमानानितन्मुख
म् बभुर्यथार्कबिंबानिसुबहूनिघनोदरम् १८ ततोजहा
सातिरुषाभीमंभैरवनादिनी कालीकरालवक्त्रांतर्दुर्दर्श
दशनोज्वलाः १९ उत्थायचमहासिंहं देवीचण्डमधा
वत गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाछिनत् २० ४१

अथ मुंडोभ्यधावत्तां दृष्ट्वा चंडं निपातितम् तमप्यपात
यद्भूमौ स खड्गाभिहतं रुषा २१ हतशेषं ततः सैन्यं दृष्ट्वा
चंडं निपातितम् मुंडं च सुमहावीर्य्यं दिशो भेजे भयातुर
म् २२ शिरश्चंडस्य काली च गृहीत्वा मुंड मेव च प्राह प्र
चंडाट्टहासमिश्रमभ्येति चंडिकाम् २३ मयात्तवात्रोपहृ
तौ चंडमुंडौ महापशू युद्धयज्ञे स्वयं शुंभं निशुंभं च हनिष्य
सि २४ ॥ऋषिरुवाच॥ २५ तावानीतौ ततो दृष्ट्वा चंडमुंडौ

दुर्गा महासुरौ उवाच कालीकल्याणी ललितं चंडिकावचः २६ राम
यस्माच्चंडं च मुंडं च गृहीत्वा त्वमुपागता चामुंडेतिततो
८२ लोके ख्याता देवि भविष्यसि २७ ॥ इतिमार्कंडेयपुराणे
सावर्णिके मन्वंतरे देवीमहात्म्ये चंडमुंडवधः ॥७॥ ऋषिरु
वाच ॥१॥ चंडे च निहते दैत्ये मुंडे च विनिपातिते बहुलेषु
च सैन्येषु क्षयितेष्वसुरेश्वरः २ ततः कोपपराधीनचेताः
शुंभः प्रतापवान् उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह ८२

३ अद्यसर्ववलैर्दैत्याः षडशीतिरुदायुधाः कंवूनांच
तुरशीतिर्निर्यांतुस्ववलैर्वृताः ४ कोटिवीर्याणिपंचाश
दसुराणांकुलानिवै शतंकुलानिधौम्राणांनिर्गछंतु
ममाज्ञया ५ कालकादौर्हृदामौर्याःकालकेयास्तथाप
रे युद्धायसज्जानिर्यांतुआज्ञयात्वरितामम ६ इत्याज्ञा
प्यासुरपतिः शुंभोभैरवशासनः निर्जगाममहासैन्यः
सहस्रैर्वहुभिर्वृतः ७ आयांतंचंडिकादृष्ट्वातत्सैन्यमतिभी

दुर्गा धराणाम् ज्यास्वनैः पूरयामास धरणीगगनांतरम् ८ त राम
नः सिंहो महानादमतीव कृतवान्नृप घंटास्वनेन तंनाद
४३ मंबिकाचोपबृंहयत् ९ धनुर्ज्यासिंहघंटानांनादापूरित
दिङ्मुखा निनादैर्भीषणैः काली जिग्ये विस्तारितानना १०
तन्निनादमुपश्रुत्य दैत्यसैन्यैश्चतुर्दिशम् देवी सिंहस्तथा का
ली च रोषैः परिवारिताः ११ एतस्मिन्नंतरे भूप विनाशाय सु
रद्विषाम् भवायामरसिंहानामतिवीर्यबलान्विताः १२ ४३

ब्रह्मेशगुहविस्नूनांतथेंद्रस्यचशक्तयः शरीरेभ्योविनि
ष्क्रम्यतद्रूपैश्चंडिकांययुः १३ यस्यदेवस्ययद्रूपंयथाभू
षणवाहनं तद्वदेवहितच्छक्तिरसुरान्योद्धुमाययौ
१४ हंसयुक्तविमानाग्रेसाक्षसूत्रकमंडलुः आयाताब्र
ह्मणः शक्तिर्ब्रह्माणीसाविधीयते १५ माहेश्वरीवृषा
रूढात्रिशूलवरधारिणी महाहिवलयाप्राप्ताचंद्ररेषा
विभूषणा १६ कौमारीशक्तिहस्ताचमयूरवरवाहना

दुर्गा योद्धुमभ्याययौ दैत्यानंविकागुहरूपिणी १७ तथैव वै राम
ष्णवी शक्तिर्गरुडोपरिसंस्थिता शंखचक्रगदाशार्ङ्गख
४५ ड्गहस्ताभ्युपाययौ १८ यज्ञवाराहमतुलं रूपं या विभ्रतो
हरेः शक्तिः साप्याययौ तत्र वाराहीं विभ्रती तनुम् १९
नारसिंही नृसिंहस्य विभ्रती सदृशं वपुः प्राप्ता तत्र सटा
क्षेपक्षिप्तनक्षत्रसंहतिः २० वज्रहस्ता तथैवैंद्री गजरा
जोपरिस्थिता प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा २१ ४५

ततः परिवृतस्ताभिरीशानो देवशक्तिभिः हन्यंतामसुराः
शीघ्रं मम प्रीत्याह चंडिकां २२ ततो देवीशरीरात्तु विनिष्क्रां
तातिभीषणा चंडिकाशक्तिरत्युग्रा शिवाशतनिनादिनी
२३ सा चाह धूम्रजटिलमीशानमपराजिता दूतत्वं गच्छ
भगवन्पार्श्वं शुंभनि[illegible]निशुंभयोः २४ ब्रूहि शुंभं निशुंभं च
दानवावतिगर्वितौ ये चान्ये दानवास्तत्र युद्धाय समुपस्थि
ताः २५ त्रैलोक्यमिंद्रो लभतां देवाः संतु हविर्भुजः यूयं प्र

दुर्गा यात पातालं यदि जीवितुमिच्छथ २६ बलावलेपादथ राम
चेद्भवंतो युध्धकांक्षिणः तदागच्छत तृप्यंतु मच्छिवाः
८५ पिशितेन वः २७ यतो नियुक्तो दौत्येन तया देव्या शिवः
स्वयं शिवदूतीति लोके स्मिंस्ततः सा ख्यातिमागता
२८ तेपि श्रुत्वा वचो देव्याः सर्वाख्यातं महासुराः अम
र्षापूरिता जग्मुर्यतः कात्यायनी स्थिता २९ ततः प्रथम
मेवाग्रे शरशक्त्यृष्टिवृष्टिभिः ववर्षुरुद्धतामर्षास्तां देवी ८५

ममरारयः ३० साचतान्प्राहितान्बाणान्शूलचक्रपरस्वधा
न् चिच्छेदलीलयाध्मातधनुर्मुक्तैर्महेषुभिः ३१ तस्याग्र
तस्तथाकालीशूलपातविदारितान् खट्वांगपोथितांश्चा
रीन्कुर्वतीव्यचरत्तदा ३२ कमंडलुजलाक्षेपहतवीर्यान्ह
तौजसः ब्रह्माणीचाकरोच्छत्रून्येनयेनास्मधावति ३३
माहेश्वरीत्रिशूलेन तथाचक्रेणवैष्णवी दैत्यान्जघान
कौमारीतथाशक्त्यातिकोपना ३४ ऐंद्रीकुलिशपातेन

दुर्गा शतशोदैत्यदानवाः पेतुर्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ३५
तुंडप्रहारविध्वस्ता दंष्ट्राग्रक्षतवक्षसः वाराहमूर्त्योन्यपतं
५६ श्चक्रेणचविदारिताः ३६ नखैर्विदारितांश्चान्यान्भक्षयं
तीमहासुरान् नारसिंहीचचाराजौनादापूर्णदिगंबरा ३७
चंडाट्टहासैरसुराः शिवदूत्यभिदूषिताः पेतुःपृथिव्यांप
तितांस्तांश्चखादाथसातदा ३८ इतिमातृगणंक्रुद्धंमर्दयं
तंमहासुरान् दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ३९ ५६

पलायनपरान्दृष्ट्वादैत्यान्मातृगणार्दितान् योद्धुमभ्याय
यौक्रुद्धोरक्तबीजोमहासुरः ४० रक्तबिंदुर्यदाभूमौपतत्यस्य
शरीरतः समुत्पततिमेदिन्यास्तत्प्रमाणस्तदासुरः ४१
युयुधेसगदापाणिरिंद्रशक्त्यामहासुरः ततश्चैंद्रीस्वव
ज्रेणारक्तबीजमताडयत् ४२ कुलिशेनाहतस्याशुतस्य
सुस्रावशोणितम् समुत्तस्थुस्ततोयोधास्तद्रूपास्तत्प
राक्रमाः ४३ यावंतः पतितास्तस्यशरीराद्रक्तबिन्दवः ता

दुर्गा वंतः पुरुषाजातास्तद्वीर्य्यवलविक्रमाः ४४ तेचापियुयु राम
धुस्तत्रपुरुषारक्तसंभवाः समंमातृभिरत्युग्रशस्त्रपाता
२७ तिभीषणाम् ४५ पुनश्चवज्रपातेनक्षतमस्यशिरोयदा ।
ववाहरक्तंपुरुषास्ततोजाताःसहस्रशः ४६ वैष्णवीसमरे
चैनंचक्रेणाभिजघानह गदयाताडयामासऐंद्रीतमसु
रेश्वरम् वैष्णवीचक्रभिन्नस्यरुधिरस्रावसंभवैः सहस्रशो
जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ४७ शक्त्याजघानकौमारी २७

वाराहीचतथासिना माहेश्वरीत्रिशूलेनरक्तवीजंमहासु
रं ४९ सचापिगदयादैत्यःसर्वाएवाहनत्पृथक् मातृःको
पसमाविष्टोरक्तवीजोमहासुरः ५० तस्याहतस्यबहुधा
शक्तिशूलादिभिर्भुवि पपातयोवैरक्तौघस्तेनासंछतसो
सुराः ५१ तैश्चासुरासृक्संभूतैरसुरैःसकलंजगत् व्याप्त
मासीत्ततोदेवाभयमाजग्मुरुत्तमं ५२ तान्विषसान्सुरा
न्दृष्ट्वाचंडिकाप्राहसत्वरा उवाचकालीचामुंडेविस्तरंवद

पातोल्पिकामपि तस्याहतस्य देहात्तु वहुसुस्राव शोणितं
५८ यतस्ततस्तद्वक्त्रेण चामुंडा संप्रतीछति मुखे समुद्ग
ता ये स्या रक्तपातान्महासुराः ५९ तांश्च खादाथ चामुंडा
पपौ तस्य च शोणितम् देवी शूलेन वज्रेण बाणैरसिभि
रृष्टिभिः ६० जघान रक्तबीजं तं चामुंडापीतशोणितम्
स पपात महीपृष्ठे शस्त्रसंघसमाहतः ६१ नीरक्तश्च मही
पाल रक्तबीजो महासुरः ततस्ते हर्षमतुलमवापुस्त्रिदशा

दुर्गा नृप ६२ तेषां मातृगणो जातो ननर्तासृङ्मदोद्धता ६३ ॥ इ एम
ति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये रक्तबी
४९ जवधः ॥ ८ ॥ राजोवाच ॥ १ ॥ विचित्रमिदमाख्यातं भगवन्म
वता मम देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितं २ भू
यश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते चकार शुंभो यत्क
र्म निशुंभश्चातिकोपनः ३ ॥ ऋषिरुवाच ॥ ४ चकार कोपम ४९
तुलं रक्तबीजे निपातिते शुंभासुरो निशुंभश्च हते ष्वन्येषु

चाहवे ५ हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् अभ्य
धावन्निशुंभोथमुख्ययासुरसेनया ६ तस्याग्रतस्तथा पृष्ठे
पार्श्वयोश्च महासुराः संदष्टौष्ठपुटाः क्रुद्धा हंतुं देवीमुपाययुः
७ आजगाम महावीर्य्यः शुंभोपि स्वबलैर्वृतः निहंतुं चंडिकां
कोपात्कृत्वा युद्धं तु मातृभिः ८ ततो युद्धमतीवासीद्देव्याः शुंभ
निशुंभयोः शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ९ चिच्छे
दास्तांश्छरांस्ताभ्यां चंडिकास्वशरोत्करैः ताडयामास चांगे

दुर्गा धुरास्थौ घोरासुरेश्वरौ १० निशुंभो निशितं खड्गं चर्म चादाय रम
सुप्रभं अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ११ ताडिते
५० वाहने देवी क्षुरप्रेणासिमुत्तमम् निशुंभस्याशु चिच्छेद चर्म
चाप्यष्टचंद्रकं १२ छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सो
सुरः तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् १३ कोपा
ध्मातो निशुंभोथ शूलं जग्राह दानवः आयातं मुष्टिपातेन
देवी तच्चाप्यचूर्णयत् १४ आविध्याथ गदां सोपि चिक्षेप चं ५०

डिकांप्रति सापि देव्यास्त्रिशूलेन भिन्नाभस्मत्वमागता १५
ततः परशुहस्तंतमायांतं दैत्य दैत्यपुंगवम् आहत्य देवी
बाणौघैरपातयत भूतले १६ तस्मिन्निपतिते भूमौ निशुं
भे भीमविक्रमे भ्रातर्यतीव संक्रुद्धः प्रययौ हंतुमंबिकां १७
स रथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः भुजैरष्टाभिरतुलैर्व्या
प्याशेषं बभौ नभः १८ तमायांतं समालोक्य देवी शंखमवादयत्
ज्याशब्दं चापि धनुषश्चकारातीव दुःसहं १९ पूरयामास कक

दुर्गा कुभो निज घंटास्वनेन च समस्तदैत्यसैन्यानां तेजोवधविधा एम
यिनां २० ततः सिंहो महानादैस्त्याजितेभमहामदैः पूरयामा
५१ स गगनं गां तथोपदिशो दश २१ ततः काली समुत्पत्य गग
नं क्ष्मामताडयत् कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरो
हिताः २२ अट्टाट्टहासमशिवं शिवदूती चकार ह तैः शब्दैर
सुरास्त्रेसुः शुंभः कोपं परं ययौ २३ दुरात्मंस्तिष्ठ तिष्ठेति व्याज
हारांबिका यदा तदा जयेत्यभिहितं देवैराकाशसंस्थितैः २४ ५१

शुंभेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा। आयांती वन्हि
कूटाभा सा निरस्ता महोल्कया। २५ सिंहनादेन शुंभस्य व्याप्तं
लोकत्रयांतरम्। निर्घातनिःस्वनो घोरो जितवानवनीपते
२६ शुंभमुक्तांछरान्देवी शुंभस्तत्प्रहितांछरान्। चिच्छेद स्व
शरैरुग्रैः शतशोथ सहस्रशः २७ ततः सा चंडिका क्रुद्धा
शूलेनाभिजघान तम्। स तदाभिहतो भूमौ मूर्छितो निपपा
त ह २८ ततो निशुंभः संप्राप्य चेतनामात्तकार्मुकः। आजघा

दुर्गा नशरैर्देवींकालींकेशरिणंतथा २९ पुनश्चकृत्वाबाहूनामयु राम
तंदनुजेश्वरः चक्रायुधेनदितिजश्छादयामासचंडिकाम् ३०
५२ ततोभगवतीक्रुद्धादुर्गादुर्गार्तिनाशिनी चिच्छेदतानिचक्रा
णिस्वशरैःसायकांश्चतान् ३१ ततोनिशुंभोवेगेनगदामा
दायचंडिकाम् अभ्यधावतवैहंतुंदैत्यसेनासमावृतः ३२
तस्यापततएवाशुगदांचिच्छेदचंडिकाखड्गेनशितधारे
णसचशूलंसमाददे ३३ शूलहस्तंसमायांतंनिशुंभमम ५२

राईनं हृदि विव्याध शूलेन वेगविद्धेन चंडिका ३८ भिन्नस्य
तस्य शूलेन हृदयान्निःसृतोऽपरः महाबलो महावीर्यस्ति
ष्ठेति पुरुषो वदन् ३९ तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्त
तः शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि ४० ततः सिंह
श्चखादोग्रं दंष्ट्राक्षुण्णशिरोधरान् असुरांस्तांस्तथा का
ली शिवदूती तथापरान् ४१ कौमारीशक्तिनिर्भिन्नाः केचि
न्नेशुर्महासुराः ब्रह्माणीमंत्रपूतेन तोयेनान्ये निराकृताः ४२

दुर्गा माहेश्वरीत्रिशूलेन भिन्नाः पेतुस्तथापरे वाराहीतुंडघाते राम
५३ नकेचिच्चूर्णीकृता भुवि ३९ खंडखंडं च चक्रेण वैष्णव्या दान
वाः कृताः वज्रेण चैंद्रीहस्ताग्रविमुक्तेन तथापरे ४० केचिद्वि
नेशुरसुराः केचिन्नष्टा महाहवात् भक्षिताश्चापरे काली
शिवदूतीमृगाधिपैः ४१॥ इति मार्कंडेयपुराणे सावर्णिके
मन्वंतरे देवीमाहात्म्ये निशुंभवधः॥ ९॥ ऋषिरुवाच॥ ॥ ॥ निशुं
भं निहतं दृष्ट्वा भ्रातरं प्राणसंमितं हन्यमानं बलं चैव शुंभः ५३

क्रुधोवुवीद्वचः २ बलावलेपाद्दुष्टेत्वंमादुर्गेगर्वमावह अन्या
सांबलमाश्रित्ययुध्यसेचातिमानिनी ३ ॥देव्युवाच॥४॥ एकै
वाहंजगत्यत्रद्वितीयाकाममापरा पश्यैतादुष्टमय्येववि
शंत्योमद्विभूतयः ५ ततःसमस्तास्तादेव्योब्रह्माणीप्रमुखा
लयं तस्यादेव्यास्तनौजग्मुरेकैवासीत्तदांबिका ६ ॥देव्युवा
च॥७॥ अहंविभूत्याबहुभिरिहरूपैर्यदास्थिता ततसं
हृतंमयैकैवतिष्ठाम्याजौस्थिरोभव ८ ॥ऋषिरुवाच॥९॥

ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः पश्यतामेव देवाना 
मसुराणां च दारुणम् १० शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चैव
दारुणैः तयोर्युद्धमभूद्भूयः सर्वलोकभयंकरं ११ दिव्यान्य
स्त्राणि शतशो मुमुचे यान्यथांबिका बभंज तानि दैत्येंद्रस्तत्प्र
तीघातकर्तृभिः १२ मुक्तानि तेन चास्त्राणि दिव्यानि परमे
श्वरी बभंज लीलयैवोग्रहुंकारोच्चारणादिभिः १३ ततः श
रशतैर्देवीमाच्छादयत सोसुरः सापि तत्कुपिता देवी धनु 

श्चिच्छेदचेषुभिः १४ छिन्ने धनुषि दैत्येंद्रस्तथाशक्तिमथा
ददे चिच्छेद देवीचक्रेणातामप्यस्यकरेस्थिताम् १५ ततः
खड्गमुपादायशतचंद्रंचभानुमत् अभ्यधावत्तदादेवीं दै
त्यानामधिपेश्वरः १६ तस्यापततएवाशुखड्गंचिच्छेदचं
डिका धनुर्मुक्तैः शितैर्बाणैश्चर्मचार्ककरामलं १७ हताश्वः
सतदादैत्यश्छिन्नधन्वाविसारथिः जग्राहमुद्गरंघोरमं
बिकानिधनोद्यतः १८ चिच्छेदापततस्तस्यमुद्गरंनिशि

दुर्गा गैःशरैः तथापिसोऽभ्यधावत्तांमुष्टिमुद्यम्यवेगवान् १९ समु राम
ष्टिंपातयामासहृदयेदैत्यपुंगवः देव्यास्तंचापिसादेवीतले
५५ नोरस्यताडयत् २० तलप्रहाराभिहतोनिपपातमहीतले स १
दैत्यराजःसहसापुनरेवतथोत्थितः २१ उत्पत्यचप्रगृह्योच्चै
र्देवींगगनमास्थितः तत्रापिसानिराधारायुयुधेतेनचंडिका
२२ नियुद्धंखेतदादैत्यश्चंडिकाचपरस्परम् चक्रतुःप्रथमं
सिद्धमुनिविस्मयकारकं २३ ततोनियुद्धंसुचिरंकृत्वातेनां ५५

बिकासह उत्पात्य भ्रामयामास चिक्षेप धरणीतले २४ स क्षि
प्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगतः अभ्यधावत दुष्टात्मा
चंडिकानिधनेछया २५ तमायांतं ततो देवी सर्वदैत्यजने
श्वरम् जगत्यां पातयामास भित्वा शूलेन वक्षसि २६ स ग
तासुः पपातोर्व्यां देवीशूलाग्रविक्षतः चालयन्सकलां पृ
थ्वीं साब्धिद्वीपां सपर्वताम् २७ ततः प्रसन्नमखिलं हते त
स्मिन्दुरात्मनि जगत्स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः २८

दुर्गा उत्पातमेघाः सोल्कायेप्रागासंस्तेसमंययुः सरितोमार्गभा रम
हिन्यस्तथासंस्तत्रपातिते २९ ततोदेवगणाः सर्वेहर्षनिर्भर
५६ मानसाः बभूवुर्निहतेतस्मिनगंधर्वाललितंजगुः ३० अ
८ वादयंस्तथैवान्येननृतुश्चाप्सरोगणाः ववुःपुण्यास्तथावा
ताःसुप्रभोभूद्दिवाकरः ३१ जज्वलुश्चाग्नयःशांताःशांत
दिग्जनितस्वनाः ३२ ॥इतिमार्कंडेयपुराणेसावर्णिकेम
न्वंतरेदेवीमाहात्म्येशुंभवधः॥१०॥ ऋषिरुवाच॥१॥ देव्याहते ५२

तत्र महासुरेंद्रे सेंद्राः सुरा वन्हिपुरोगमास्तां कात्यायनीं तुष्टुवु
रिष्ठलंभाद्विकाशि वक्राब्जविकाशिताशाः १ देविप्रसन्ना
र्त्तिहरे प्रसीद प्रसीद मातर्जगतोखिलस्य प्रसीद विश्वेश्व
रि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य २ आधारभूता
जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि अपां स्वरूप
स्थितया त्वयैतदाप्याय्यते कृत्स्नमलंघ्यवीर्ये ४ त्वं वैष्णवी
शक्तिरनंतवीर्या विश्वस्य वीजं परमासि माया संमोहि

दुर्गा तं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ५ विद्याः समस्ता राम

स्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु त्वयैकया पू

५७ रितमंबयैतत्का ते स्तुतिः स्तव्यपरा परोक्तिः ६ सर्वभूता य

दा देवी स्वर्गमुक्तिप्रदायिनी त्वं स्तुता स्तुतये का वा भवंतु प

रमोक्तयः ७ सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते स्व

र्गापवर्गदे नारायणि नमोस्तु ते ८ कलाकाष्ठादिरूपेण प

रिणामप्रदायिनी विश्वस्योपरतौ शक्ते नारायणि नमो ५७

वि

स्तुते ९ सर्वमंगलमंगल्येशिवेसर्वार्थसाधिके शरण्ये
त्र्यंबकेगौरिनारायणिनमोस्तुते १० सृष्टिस्थितिविना
शानांशक्तिभूतेसनातनि गुणाश्रयेगुणमयेनारा
यणिनमोस्तुते ११ शरणागतदीनार्तपरित्राणपराय
णे सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते १२ हंसयुक्त
विमानस्थेब्रह्माणीरूपधारिणि कौशांभःक्षरिकेदेवि
नारायणिनमोस्तुते १३ त्रिशूलचंद्राहिधरेमहावृषभ

 वाहिनि माहेश्वरीस्वरूपेणनारायणिनमोस्तुते १४ 
मयूरकुक्कुटवृतेमहाशक्तिधरेनघे कौमारीरूपसंस्थाने
 नारायणिनमोस्तुते १५ शंखचक्रगदाशार्ङ्गगृहीतपरमा
युधे प्रसीदवैष्णवीरूपेनारायणिनमोस्तुते १६ गृहीतोग्र
महाचक्रे दंष्ट्रोधृतवसुंधरे वाराहरूपिणिशिवेनारायणि
नमोस्तुते १७ नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतोद्यमे त्रै
लोक्यत्राणसहितेनारायणिनमोस्तुते १८ किरीटिनि 

महावज्रेसहस्रनयनोज्वले वृत्रप्राणाहरेचैंद्रिनारायणि
नमोस्तुते १९ शिवदूतीस्वरूपेणहतदैत्यमहाबले घोर
रूपेमहारावेनारायणिनमोस्तुते २० दंष्ट्राकरालवदने
शिरोमालाविभूषणे चामुंडेमुंडमथनेनारायणिनमो
स्तुते २१ लक्ष्मिलज्जेमहाविद्येश्रद्धेपुष्टिस्वधेध्रुवे म
हारात्रिमहाविद्येनारायणिनमोस्तुते २२ मेधेसरस्वति
वरेभूतिबाभ्रवितामसि नियतेत्वंप्रसीदेशेनारायणिन

दुर्गा मोस्तुते २३ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते भयेभ्यस्त्रा ९म
हि नो देवि दुर्गे देवि नमोस्तुते २४ एतत्ते वदनं सौम्यं लोचन
५९ त्रयभूषितम् पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तु
ते २५ ज्वालाकरालमत्युग्रमशेषासुरसूदनं त्रिशूलं पा
तु नो भीतेर्भद्रकालि नमोस्तुते २६ हिनस्ति दैत्यतेजांसि
स्वनेनापूर्य या जगत् सा घंटा पातु नो देवि पापेभ्यो नः
सुतानिव २७ असुरासृग्वसापंकचर्चितस्ते करोज्वलः ५९

शुभाय खड्गो भवतु चंडिके त्वानतावयम् २८ रोगानशे
षानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान् त्वा
माश्रितानान्नविपन्नराणां त्वामाश्रिता ह्याश्रयतां प्र
यांति २९ एतत्कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महा
सुराणां रूपैरनेकैर्बहुधात्ममूर्त्तिं कृत्वांबिके तत्प्रक
रोति कान्या ३० विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वा
क्येषु च का त्वदन्या ममत्वगर्त्तेतिमहांधकारे विभ्रामयत्ये

दुर्गा नद्दतीवविश्वं ३१ रक्षांसियत्रोग्रविषाश्चनागायत्रारयोद राम
स्युबलानियत्र दावानलोयत्रतथाब्धिमध्येतत्रस्थिता
६० त्वंपरिपासिविश्वम् ३२ विश्वेश्वरित्वंपरिपासिविश्वंवि
श्वात्मिकाधारयसीतिविश्वम् विश्वेशवंद्याभवतीभवंति
विश्वाश्रयायेत्वयिभक्तिनम्राः ३३ देविप्रसीदपरिपाल
यनोरिभीतेर्नित्यंयथासुरवधादधुनैवसद्यः पापानि
सर्वजगतांप्रशमंनयाशुउत्पातपाकजनितांश्चमहोप ६०

सर्गान् ३४ प्रणतानांप्रसीदत्वंदेविविश्वार्तिहारिणि त्रै
लोक्यवासिनामीड्येलोकानांवरदाभव ३५ ॥देव्युवाच॥ ३६
वरदाहंसुरगणावरंयन्मनसेच्छथ तंवृणुध्वंप्रयच्छामि
जगतामुपकारकम् ३७ ॥देवाऊचुः॥ ३८॥ सर्वाबाधाप्रश
मनंत्रैलोक्यस्याखिलेश्वरि एवमेवत्वयाकार्यमस्म
द्वैरिविनाशनं ३९ ॥देव्युवाच॥४०॥ वैवस्वतेंतरेप्राप्तेअष्टा
विंशतिमेयुगे शुंभोनिशुंभश्चैवान्यावुत्पत्स्येते महासु

दुर्गा यो ४१ नंदगोपगृहे जाता यशोदागर्भसंभवा ततस्तौ ना राम
शयिष्यामि विंध्याचलनिवासिनी ४२ पुनरप्यतिरौद्रे
श ण रूपेण पृथिवीतले अवतीर्य हनिष्यामि वैप्रचित्तां
स्तु दानवान् ४३ भक्षयंत्याश्च तानुग्रान्वैप्रचित्तान्महासु
रान् रक्ता दंता भविष्यंति दाडिमीकुसुमोपमाः ४४।
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः स्तुवंतो व्याह
रिष्यंति सततं रक्तदंतिकाम् ४५ भूयश्च शतवार्षिक्याम ६१

नावृष्ट्यामनंभसि मुनिभिः संस्तुता भूमौ संभविष्याम्ययोनि
जा ४६ ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् कीर्त्ति
यिष्यंति मनुजाः शताक्षीमिति मां ततः ४७ ततोहमखिलंलो
कमात्मदेहसमुद्भवैः भरिष्यामि सुराः शाकैरावृष्टेः प्राण
धारकैः ४८ शाकंभरीति विख्यातिं तदा यास्याम्यहं भु
वि तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरं ४९ दुर्गा देवी
ति विख्यातं तन्मे नाम भविष्यति पुनश्चाहं यदा भीमं रू

दुर्गा पंकृत्वा हिमाचले ५० रक्षांसि भक्षयिष्यामि मुनीनां त्राण राम
६२ कारणात् तदा मां मुनयः सर्वे स्तोष्यंत्यानम्रमूर्तयः ५१
भीमा देवीति विख्यातं तन्मे नाम भविष्यति यदारुणाख्य
स्त्रैलोक्ये महाबाधां करिष्यति ५२ तदाहं भ्रामरं रूपं कृत्वा
संख्येयषट्पदं त्रैलोक्यस्य हितार्थाय वधिष्यामि महासु
रम् ५३ भ्रामरीति च मां लोकास्तदा स्तोष्यंति सर्वतः इत्थं
यदा यदा बाधा दानवोत्था भविष्यति ५४ तदा तदावती ६२

र्यदहं करिष्याम्यरिसंक्षयम् ५५ ॥ इति मार्कंडेयपुराणे सा
वर्णिके मन्वंतरे देवीमाहात्म्ये नारायणीस्तुतिः ॥ ११ ॥ देव्यु
वाच ॥ १ ॥ एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः त
स्याहं सकलां बाधां शमयिष्याम्यसंशयम् २ मधुकैटभ
नाशं च महिषासुरघातनम् कीर्तयिष्यंति ये तद्वद्वधं शु भे
म्भनिशुंभयोः ३ अष्टम्यां च चतुर्द्दश्यां नवम्यां चैकचेतसः
श्रोष्यंति चैव ये भक्त्या मम माहात्म्यमुत्तमं ४ न तेषां दुष्कृ

दुर्गा तं किंचिदुष्कृतोत्था न चापदः भविष्यति न दारिद्र्यं न चैवेष्ट राम
वियोजनं ५ शत्रुतो न भयं तस्य दस्युतो वा न राजतः न
६३ शस्त्रानलतो योघात्कदाचित्संभविष्यति ६ तस्मान्ममैत
न्माहात्म्यं पठितव्यं समाहितैः श्रोतव्यं च सदा भक्त्या परं स्वस्त्य
यनं महत् ७ उपसर्गानशेषांस्तु महामारीसमुद्भवान् तथा
त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ८ यत्रैतत्पठ्यते सम्य
क्नित्यमायतने मम सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे ६३

स्थितम् ९ बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ।
सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च १० जानताजानता
वापि बलिपूजां तथाकृताम् प्रतीच्छिष्याम्यहं प्रीत्या वह्नि
होमं तथाकृतम् ११ शरत्काले महापूजा क्रियते या च वार्षि
की तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः १२ ।
सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः मनुष्यो मत्प्र
सादेन भविष्यति न संशयः १३ श्रुत्वा ममैतन्माहात्म्यं त

दुर्गा

६४

भावोत्पन्नयः शृभः पराक्रमंच युद्धेषुजायते निर्भयः पुमान् राम
१४ रिपवः संक्षयं यांति कल्याणं चोपपद्यते नंदते च कुलं
पुंसां माहात्म्यं मम शृण्वताम् १५ शांतिकर्मणि सर्वत्र त
था दुःस्वप्नदर्शने ग्रहपीडासु चोग्रासु माहात्म्यं शृणुया
न्मम १६ उपसर्गाः शमं यांति ग्रहपीडाश्च दारुणाः दुःस्व
प्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते १७ बालग्रहाभिभूतानां
बालानां शांतिकारकम् संघातभेदे च नृणां मैत्रीकरणमुत्त ६४

मम १८ दुर्वृत्तानामशेषाणां बलहानिकरं परम् रक्षो
भूतपिशाचानां पठनादेवनाशनं १९ सर्वंममैतन्माहा
त्म्यं ममसान्निध्यकारकं पशुपुष्पार्घधूपैश्चगंधदीपैस्तथो
त्तमैः २० विप्राणांभोजनैर्होमैःप्रोक्षणीयैरहर्निशम्
अन्यैश्चविविधैर्भोगैःप्रदानैर्वत्सरेणया २१ प्रीतिर्मेक्रि
यतेसास्मिन्सकृत्सुचरितेश्रुतेश्रुतंहरतिपापानितथारो
ग्यंप्रयच्छति २२ रक्षांकरोतिभूतेभ्योजन्मनांकीर्तनंमम

दुर्गा युद्धेषु चरितं यन्मे दुष्टदैत्यनिवर्हणम् २३ तस्मिन्छ्रुते राम
वैरिकृतं भयं पुंसां न जायते युष्माभिस्तुतयो याश्चया
६५ श्च ब्रह्मर्षिभिः कृताः २४ ब्रह्मणा च कृतास्तु प्रयच्छंति शु रुतर
भं मतिं अरण्ये प्रांतरे वापि दावाग्निपरिवारितः २५
दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः सिंहव्याघ्रानु
यातो वा वने वा वनहस्तिभिः २६ राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो
बंधगतोपि वा आघूर्णितो वा वातेन स्थितः पोते महार्णवे २७ ६५

पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे सर्वाबाधासु घोरासु
वेदनाभ्यर्दितोपि वा २८ स्मरन्ममैतच्चरितं नरो मुच्येत संक
टात् मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तथा २९ दूराद
व पलायंते स्मरतश्चरितं मम ३० ॥ऋषिरुवाच॥ ३१ इत्युक्त्वा
सा भगवती चंडिका चंडविक्रमा पश्यतामेव देवानां तत्रैवां
तरधीयत तेपि देवा निरातंकाः स्वाधिकारान्यथा पु
रा ३२ यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः दैत्याश्च दे

दुर्गा आनिहतेशुंभेदेवारिपौयुधि ३४ जगद्विध्वंसिनितस्मिन्म एम
होग्रेतुलविक्रमे निशुंभेचमहावीर्ये शेषाःपातालमाय
६६ युः ३५ एवंभगवतीदेवीसानित्यापिपुनःपुनः संभूयकु
रुतेभूपजगतःपरिपालनं ३६ तयैतन्मोह्यतेविश्वंसैव
विश्वंप्रसूयते सायाचितावविज्ञानंतुष्टाऋद्धिंप्रयच्छति ३७
व्याप्तंतयैतत्सकलंब्रह्माण्डंमनुजेश्वर महाकाल्यामहा
कालेमहामारीस्वरूपया ३८ सैवकालेमहामारीसैवसृष्टि ६६

ने संदर्शनार्थमंबायानदीपुलिनसंस्थितः ९ सचवैश्य
स्तपस्तेपेदेवीसूक्तंपरंजपन् तौतस्मिन्पुलिनेदेव्याःकृत्वा
मूर्त्तिंमहीमयीम् १० अर्हणांचक्रतुस्तस्याः पुष्पधूपा
ऽग्नितर्पणैः निराहारौयतात्मानौतन्मनस्कौसमाहितौ
११ ददतुस्तौबलिंचैवनिजगात्रासृगुक्षितम् एवंसमारा
धयतोस्त्रिभिर्वर्षैर्यतात्मनोः १२ परितुष्टाजगद्धात्रीप्रत्य
क्षंप्राहचंडिका १३ ॥देव्युवाच॥ १४ यत्प्रार्थ्यतेत्वयाभूपत्व

दुर्गा याचकुलनंदन मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि तत् राम
१५॥ मार्कंडेय उवाच ॥१६ ततो वव्रे नृपो राज्यमविभ्रंश्यन्य
६९ जन्मनि अत्रैव च निजं राज्यं हतशत्रुबलं बलात् १७ सोपि
वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः ममेत्यहमिति प्राज्ञः
संगविच्युतिकारकम् १८॥ देव्युवाच ॥१९॥ स्वल्पैरहोभि
र्नृपते स्वं राज्यं प्राप्स्यते भवान् २० हत्वा रिपूनस्खलितं तत
व तत्र भविष्यति २१ मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ६९

दुर्गा र्यते जगत् २ विद्यां तथैव क्रियते भगवद्विष्णुमायया तथा राम
त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ३ मोह्यन्ते मोहिताश्चै
६७ व मोहमेष्यन्ति चापरे तामुपैहि महाराज शरणं परमेश्वरीं
४ आराधिता सैव नृणां भोगस्वर्गापवर्गदा ५॥ मार्कंडे
य उवाच॥ ६ इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ७
प्रणिपत्य महाभागं तमृषिं शंसितव्रतम् निर्विण्णोति मम
त्वेन राज्यापहरणेन च ८ जगाम सद्यस्तपसे स च वैश्यो महामु ६७

र्भवत्यजा स्थितिं करोति भूतानां सैव काले सनातनी ३९
भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा ग्रहे सैवाभावे तथाल
क्ष्मीर्विनाशायोपजायते ४० स्तुता संपूजिता पुष्पैर्धूप
गंधादिभिस्तथा ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभां
४१॥ इति मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहा
त्म्ये भगवतीवाक्यम्॥१२॥ ऋषिरुवाच॥ १ एतत्ते कथि
तं भूप देवीमाहात्म्यमुत्तमम् एवंप्रभावा सा देवी ययेदं धा

दुर्गा २२ सावर्णिको नाम मनुर्भवान्भुवि भविष्यति २३ वैश्यवर्य एम
त्वया यश्च वरो स्मत्तो भिवांछितः २४ तं प्रयच्छामि संसिद्ध्यै
६९ तव ज्ञानं भविष्यति २५ ॥ मार्कंडेय उवाच ॥ २६ इति दत्वा त
योर्देवी यथाभिलषितं वरम् बभूवांतर्हिता सद्यो भक्त्या
ताभ्यामभिष्टुता २७ एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्ष
भः सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः २८ साव
र्णिर्भविता मनुः २९ ॥ इति मार्कंडेयपुराणे सावर्णिके मन्वंत
रे देवीमाहात्म्ये सुरथवैश्यवरप्रदानं नाम त्रयोदशः ॥१३ ६९